श्रीगणेशाय नमः ॥

# ॐ कुमारसहस्रनामावलिः

भैरवः ॥ धनं दारान्सुतान्क्षेत्रं धान्यं पशुधनं तथा । प्राप्नोति पुरुषो नित्यंस्मरणाद्यस्य स्वामिनः ॥ तस्य वक्ष्ये कुमारस्य दिव्यं नामसहस्रकम् । सर्वतः पापहं धर्म्यं जप्यमेतन्मुमुक्षुभिः ॥

" अस्य श्रीस्वामिकार्तिकेयनामसहस्रस्य, ब्रह्मा ऋषिः, गायत्रंछन्दः, षडाननो देवता, हांबीजं, कुमारायेतिशक्तिः, नमइतिकीलकं आत्मनो० चतुर्वर्गसिद्ध्यर्थे पाठेविनियोगः ॥ कां कींमितिन्यासः ॥ध्यानं ॥

देवं षण्मुखभूषितं सुचतुरं तं द्वादशाक्षं जटा-
तंसं शक्तिधरं सुशुक्लममलं सद्वैजयन्त्याश्रितम् ।
घण्टापाणिभुमाङ्कशीलिनमऽजानन्दं शिखीन्द्रालयं
ध्यायेऽभीष्टवरप्रदं हृदि सदा रक्ताङ्गरागस्रजम् ॥

ॐ कार्तिकेयाय विद्महे,सेनाधिपतये धीमहि । तन्नःकुमारः प्रचोदयात् ३ ॥ ॐ नमः स्वामिकार्तिकेयाय ॥ ॐकुमाराय स्वाहा, कवचिने, कन्दाय, कर्मठाय, कलिकालजिते, कन्दर्परूपाय, कामेशाय, कालपुत्राय, कलाधराय, कलङ्करहिताय, कामकलनाय, कलिकालिकाय, कलाकलितकाय, कामिने, कामनाशाय, करास्पदाय, कठोरचित्ताय, कलशिने, कलाय, कलकराय, करीरनीलाय, किञ्जल्ककलिताय, कोकिलालपाय, क-

रिवकृताग्रगाय, कीलाजटाय, कलिलनाशनाय, कोलपूज्याय, कीलमोक्षाय, कपिलाय, कपिलाननाय, कलकलाय, कलालापाय, कन्दर्पिने, कपटापहाय. कस्मै, काय केताय, कपीन्द्रास्याय कपये, कपिलरूपधृते, कीनाशनाशाय, कङ्कालधारिणे, कक्कोलभक्षकाय, कपोलिने, कमलाकान्ताय, कमलाय, कोशवर्धनाय, कीरवाचे, क्रूरघ्ने, क्रूराय, कूर्मपृष्टाय, क्रमाय, अक्रमाय, क्रौञ्चारये क्रकचोदीर्णाय कृत्तिवाससे कृतिने कृताय करालाय कुलसंपूज्याय कुलघ्ने कुलचेतनाय क्रव्यादगणपरीवाराय क्रव्यादाय कदलीमृदवे कलापियानाय कृकराय कारवे कारिणे कराय कुरवे कल्लालदोष्णे कटीनद्धाय कोटिदाय कोटितत्पराय कटकिने कटवाय कोट्टस्थानाय करभवर्त्तनाय कालरूपाय कम्बुगलाय करिगाय कलगाय करिणे कर्मीराय कल्मषाय करिठने कृतज्ञाय कृत्तिभास्वराय कुवेरवन्धवे काशीपाय कृशमध्याय कृशानुदृशे कुण्डलयलङ्कृताय केशचणाय कचमणये कचाय कश्मीरनिलयाय कम्पाय (तेजोसि) चराचरगुरवे १०० ॥ ॐ चरायस्वाहा चलाचलाय चलज्जिह्वाय चम्पापतये चमूपतये चपालनिलयाय चण्डीप्रियपुत्राय चयाय चुपाय चमूरचर्मवासिने चमकाय चमरीगतये चपलाद्युतिभृते चण्डाय चण्डालक्षपणाय चहाय चकोरनेत्राय चेलासाय चमसिने चीनवस्त्रभृते चार्वङ्गाय चीरवते चन्द्रकलाकलितशेखराय चन्द्रशीताय चन्द्रद्योतिने चन्द्रकावृतदे-

हभृते चन्दनालेपनाय चन्द्राय चन्द्रशेखरललिताय चाणूरमर्द-
नाय चक्रधारिणे चक्रवरानताय चक्रमध्यगताय. चक्रिणे चाक्रि
काय चण्डविग्रहाय चम्पकालङ्कृताय चाराय चारुनेत्राय चला-
ऽलकाय चलद्भ्रुवे चीभनाय चारवे चौरघ्ने चोलपूजिताय चरि
त्रचञ्चवे चण्डीशशास्त्रे चामरचर्चिताय चलनीलगतये चोष्याय
स्वादज्ञाय चुम्बकाय चलाय चलाक्षाय चपलोन्माथिने चम्पेयध
वलाय चकाय चम्पूस्तव्याय चारकाय चरकज्ञनिषेविताय चा-
णिक्यकुशलाय चित्राय चित्रकर्मणे चर्मभृते अलुम्पकाय चण्डांशवे
चामीकरनिभाननाय चटत्कारकृतारावाय चंडीवन्द्याय चलालिका
य चतुर्थीप्रियपूर्वाय चतुर्थीप्रियपालनाय चतुराय चतुराङ्गाढ्याय
चतुष्पथकृतालयाय चतुरव्रतपूज्याय चतूराय चरणार्चिताय चञ्च
रीककृतालापाय चिरध्येयाय चिरातृपाय चञ्चुराय चोद्यकर्त्रे चो
दकाय चोदनाप्रियाय चुलकाचामकाय चित्रचित्रकाङ्कितगोधिका
य चित्राङ्गदाय चित्रभूषाय चिताभस्मानुलेपनाय चिन्तानाशकरा
य चित्तसुखदाय चित्तपद्मभुवे चतुरात्मने चतुर्बाहवे चतुर्व्यूहाय चतु
र्मुखाय चतुरर्थकराय चार्वीगम्याय चतुरक्षराय (ते०) अनादये॥
२००। अगदाय अनन्ताय अजराय अक्षरविचारकाय अप्रमेयाय
अन्तरङ्गाय अणवे अनूनाय अनवराय अनघाय अघघ्ने अनघचि
न्त्याय अघासुरनिसूदनाय अगस्थिराय अगस्त्यनताय अबलाबल
ददाय अवनाय अमोघविक्रमाय अगम्याय अनुत्तानाय अनुत्तराय

अपराय अपाराय अकुन्त्रिमाचाराय अपारावारगभीरधिये अतर्क्याय अनर्घ्यमाहात्म्याय अनेकाधाराय अलयाय अरिधृते अत्रस्वे अगजाभर्त्रे अगेशयाय अङ्काधेवाशिताय असङ्गाय अविभ्रमाय अभङ्गाय अन्धोघ्नाय अब्जाधृतशेखराय अलङ्घ्याय अतीन्द्रियाय अतीन्द्राय अगजावञ्चनपेशलाय अस्तभ्यमूर्तये अन्तज्ञाय अनन्तार्चितपदद्वयाय अचेत्याय अक्षराय अकोपाय अकुसृतये अमलाम्बराय अङ्कार्पितप्रदाकये अचलाटनतत्पराय अमोघविक्रमाय अमर्त्यस्तुताय अमृतपदाय अपदाय अमरार्पितसद्भागाय अभवाय अम्बुजाकृतासनाय अम्बुजार्चितपादाब्जाय अरजसे अफल्गुमनोरथाय अहीनबाहवे अग्राह्याय अहीनाहितविभूषणाय अहीनभोगदाय अभोगाय अंसपीठधृतभूतिकाय अंग्राङ्गनाय अङ्गदाय अनङ्गप्रीतिकृते अगजार्चिताय अग्रगण्याय महामात्याय असदाय अदमविभेदकाय अघोपघोष्याय अघोराय अमलामलविग्रहाय अग्रदर्शिने अग्रमात्रे अनलसाय अलसकोपनाय अनेककोटिदाय अकोटये अरक्ताय अलक्ष्यरूपकाय अमृतांशाय अमृतांशवे अमृतेश्वराय अमृतांशप्रसन्नाय अमरेशाय अमरारिघ्ने अकल्याय अकलहाय अकल्पाय अमूर्तये आनन्दविग्रहाय (तेजोसि) आलोकाय ॥ ३०० ॥ ॐ आप्लवायस्वाहा अप्यालाय आनन्देश्वराय आम्नायाय आगमज्ञेयाय आचारनिधये आज्ञाधराय आज्यभागाय इनाय इभमुखाय इन्द्राय इन्दुकलाधारिणे इन्द्रजालपटवे ईड्याय ईशा

नाय ईरिणे तालाङ्काय तालविग्रहाय तलातलगताय मालिने मा-
ल्यवते ककुदिने कलङ्कघ्ने कपालिने कालिकारमणाय करालरूपा
य कालाग्नये शिखावते शिखिवाहनाय शिरीषकोमलाङ्गाय करीरा
भाय करीरभृते कनकाङ्गददोर्दण्डाय कनकाशाय जयिने जालन्ध
ररिपवे ताराय तारकान्तकाय तारकाय तारवादिने ताराय तार
कराजजिते तरये तरुणरूपिणे तरुशायिने तटान्तकाय तात्पर्यज्ञा
य तलोन्माथिने तारापतये अतलाय तलिनाय तडागाय ततरूपाय
तारदृशे तुलाहीनाय तालज्ञाय तुहिनांशवे तालिकाय स्तोत्राय तु
न्दिलरूपाय तुहिनाचलसंश्रयाय तोतुलाप्रियकारिणे तालवे तो-
तिलरूपकाय तुलापुरुषसंवादाय तर्कगम्याय तलोज्झिताय तालु
ज्ञानरताय तापहन्त्रे तरणये तपोवनरताय तुण्डस्तुताय तापनाय
तमालवनचारिणे तिलकाय ततविश्वकाय तमीभर्त्रे तमोहन्त्रे ताम-
साय तुमलप्रियाय त्वङ्गनाय तङ्गनाय तस्मै तमोरये त्वचिसारका
य ताम्राक्षाय त्र्यम्बकाय त्र्यक्षाय तीक्ष्णज्योतिषे त्रिबन्धुहृते त्रि-
पुरारये त्रिमूर्तीशाय तृतीयपदसंश्रयाय त्रिबन्धवे त्रिपुराधीशाय
तृतीयनयनोज्ज्वलाय त्रिपदासारगेयाय त्रिपुटीशरणाय पवनाय
(तेजोसि) ॐपालकायस्वाहा ॥ ४०० ॥ ॐपालीपाणयेस्वाहा,
पालयग्रण्ये पटवे पातालालयघ्ने पानसक्ताय पङ्कजलोचनाय प-
लायनपराय पीठसंस्थिताय पीठपूजिताय पुरोहिताय पुरोगामिने
पुरारातये पुरेश्वराय प्रवीणाय पुण्यदृशे पूततनवे पर्वतसंश्रयाय

परीक्षकाय पुराणज्ञाय प्रमाणाय प्रत्ययाय प्रमायै प्रमात्रे परमंधाम्ने परंब्राह्मणे पराश्रयाय परापरगतये पाराय पुराणपुरुषाय पदाय प्रकृतिप्रभवाय पात्रे प्रलयाय पद्मविष्टराय पद्माक्षाय पद्मभुवे पाथवरदाय पार्थिवाय पणाय परागतये परेशानाय पुरुषाय पितामहाय पीनवक्षसे पीतवपुषे पत्रिगाय पथिकाय पताय पुरोडाशरताय पान्थाय परेतावृताय पाशिने पलाशहस्ताय पद्माङ्काय परमेश्वराय पुराणगम्याय पूताय पुष्पपूज्याय पुरेशयाय प्रद्युम्नाय पुष्पबाणाय पूज्याय पुष्पशिखामयाय परमेष्ठिने प्रकृतीष्टाय परापरकृतास्पदाय पूर्त्ताय पौलस्त्यवरदाय पौलोमीकुचमर्दनाय प्रजापालाय प्रजालोपिने पूतनान्तकाय पूतनाम्ने पांथतोषिणे पर्यङ्कशयनाय पटाय परमायुषे पशुपतये पल्लीवासिने परायणाय प्रमोदिने पत्तनाय पर्वणे पवित्राय पात्राय सर्वभूतानांपालनाय पूर्णाय पूरयित्रे पत्ये पुण्यकीर्तये पापघ्नाय पविहस्ताय पक्षिराजे पतङ्गधाम्ने पूर्णाशाय पतगेशाय प्रशांतधिये याज्याय यजनपूज्याय (तेजांसि) ॐयष्ट्रे स्वाहा ५०० ॥ ॐयक्षप्रियायस्वाहा यमाय यमाख्याय यजुरूपाय यायिने यानरताय यव्यै यानपानगतये यागिने यमलोकैकशासनाय यशस्विने यापनाय यामाय योगीन्द्राय याज्ञिकप्रियाय यन्त्रे यशोधराय यज्वने यक्षेशाय यामलागमाय योद्ध्रे युगान्तनिलयाय युगलाय युगनामभृते योजनाख्याय यागगम्याय यज्ञभुजे यजतांवराय यायजूकाय यज्ञभोक्त्रे युगावर्ताय यमात्मकाय

यज्ञघ्नाय यमभीतिघ्नाय यमारये यक्षपालकाय यूपाय लक्ष्मीधराय लास्याय ललिताय ललितागमाय लम्बोदराच्यीय लज्जावते लाभदाय ललिताननाय लङ्केशार्चितपत्पद्माय ललनाललिताय लला य लक्ष्याय ललितदेहाय लाक्षारुणपदद्वयाय लयेशाय लङ्घितारातये लिङ्गरूपिणे लताश्रयाय लम्बनाय लघुचेष्टाय रतीशाभाय रतिप्रियाय रमणाय राक्षसेन्द्रघ्नाय रक्षोधिपसुपूजिताय राकापतिवपुषे राज्ञे रमापतिवरप्रदाय राजराजार्चिताय रात्रिधवाङ्कितकलेवराय रामपूज्याय रामस्पर्धिने रेवतीजानिपूजिताय रेवारताय राज्यप्रदाय रावणारातिपूजिताय रसातलगताय रामाय रमणीरामकाय रात्रिनाथाननाय रङ्गनर्तकाय रणाकत्थनाय रालाच्यीय रक्तनेत्राय रसज्ञाय रसवल्लभाय रमाप्रियाय रावणाच्यीय रामेशाय रामवल्लभाय रोहिणीशाय रमाभर्त्रे रसनाय रभसप्रियाय रणार्जितयशसे रक्तनेत्राय रल्लकवासनाय रतीशदेहदाहिने रतिज्ञाय रसभावविदे रोहिताश्वाय रत्नमौलये (त०) ॐ इङ्गनायस्वाहा ॥ ६०० ॥ ॐ इभसद्गतये इननेत्राय इलापुत्राय सर्वकर्मणामीशानाय ईड्याय ईश्वरपुत्राय ईप्सितार्थफलप्रदाय ईतिभङ्गाय खलघ्ने खलण्वे खलपावनाय खसत्ताकाय खसूतये खगतये खचरेश्वराय खमूर्धने खमणये खड्गहस्ताय खचरलोचनाय खगयानाय गणेशानाय गजासुरनिसूदनाय गमागमविहीनाय गमागमविशेषकाय गमागमातिगज्ञेयाय गाङ्गेयाय गणसुवे गणाय गम्भीरनिनदाय

गेयप्रियाय गुरुविशेषिताय गरीयसे गहनाय गण्डमालिने गुणग
णार्चिताय गुण्याय गणकपूज्याय गगनामलसत्त्वधृते गजालया
गंजपतये गुहावासिने गिरिप्रियाय संन्यासतत्त्वानांगतये गतप
रात्मनांगम्याय गयादितीर्थसंघानांपावनाय गतिमते गतये घस्
राय घुसृणालेपिने घृणिने घृतभुजार्चिताय घृणिमते अघानांघ
र्षणाय घनाघनरवाय घनाय घनवाद्यरताय छन्दोभ्यः छविमते अं
सांछिदुराय छन्दसांछन्दरूपाय जरातीताय जपप्रियाय जपाकुसु
मसङ्काशायजनपालाय जलेश्वराय जालन्धरधराय जालिने जाल-
न्धरनिसूदनाय जाज्वल्यमानतेजसे जगतीशाय जनातिगाय जम्बा-
रातिप्रियाय जम्बूप्रसूनाभरणाय जटिने जाबालवेशप्रच्छन्नाय ज-
जशालिने जटापहाय जाड्यघ्ने जङ्गलवासिने नृणांजन्मसाफल्यदा
य जवनाय जीनाय जीवप्राणदाय जपतांवराय जल्पाकाय जन-
जन्मादये जलध्याश्रयाय जलदाय जर्जरीवाद्यरताय झङ्काराय
झरप्रवाह्याय ढक्काढ्याय ढणत्कारप्रियाय बन्धुराय बन्धुराङ्गाय
बन्धुमोचनतत्पराय वालखिल्याग्रण्ये बन्धुप्रियाय बधरसंश्रयिने
(त०) ॐबलिप्रियायस्वाहा ७०० । ॐबलारातिरतिदाय बहुदाय
बहवे बाहुभूष्याय बलिघ्नाय बलासुरनिसूदनाय बलदाय बलिदां-
श्रेष्ठाय वलिष्ठाय बलिदायकाय बाहुलाय बलिदर्पघ्नाय बहुलाबल-
घ्ने बलासुरप्रमाथिने वकपत्रिणे बलोज्ज्वलाय भास्वराय भास्करा-
य भालतलाङ्कितकलोज्ज्वलाय भामाप्रियाय भस्मरूक्षाय भमालिने

भगमालिने भगिने भगवद्दीक्ष्याय भुवनेशाय भगोच्छ्रयकृते भागिने भोगिविभूषाय भूशायिने भारघ्ने भूतप्रभवे भूतीशाय भगनेत्रहराय भपे भानवे भे भुवे भूमिशायिने भूतिदायिने भुवोगतये भोगास्पदाय भूपवन्द्याय भोगिकङ्कणाय भौमासुरप्रमाथिने भौमपीडानिवारणाय भौमदेवाय भूमिदेवभक्तिपूजितपत्कजाय भूमिद्वाराय मतये मन्त्रे मरणत्रासहारकाय महिषासुरघातिने महिषासनभीतिदाय मननाप्याय मनोध्येयाय मतिमते मननप्रियाय मनोरथपथातीताय मनोरथगतिप्रदाय मनोभिरामाय मान्याय महेष्वासाय महाकृपाय महाभरणदक्षाय महाभीतिप्रभञ्जनाय मुनये मननशीलाय मुनीनांत्राणकारणाय मरुज्ज्येष्ठाय मरुत्वते मरुपातामृतापहाय मठाश्रयाय मणिस्थानाय मज्जीरध्वनिसंगताय महाशयाय महाशाय महादेवाय महातपसे महाचरितचञ्चवे महाचर्यनिधये महसे महनीयपदद्वन्द्वाय महानीतये महागुणाय महाधृतये महाशान्ताय महीभरणतत्पराय मयूरपृष्ठगाय मन्त्रिग्रामरणे मन्त्रपारगाय महासीनाय महाचित्ताय महानन्दाय महोदयाय वाजिकृत्तारिपूगाय वाजिपेयैकसाधकाय (त०) ॐ वानप्रस्थार्च्यपत्पीठाय स्वाहा ८०० ॥ अमलात्मनांवरणीयाय वृन्दारकोत्तमाय वन्यवृत्तये वनेनवञ्चकाय वन्दारुगम्याय वृन्दश्रिये वनमालिने विशांपतये वनेचराग्रण्ये वन्द्यचरणाय वनमालकाय वसवे वसुप्रदाय वस्तुसाधकाय वास्तुपूजिताय वासन्तीवासिताय वलगत्पाणये वचनसौख्य-

दाय वल्लीव्रततिगुप्तात्मने वामनाय वामलोचनाय विशुद्धात्मने विरूपाय विस्ताराय विग्रहिने विषाय विकृताय विश्वरूपाय विख्याताय विश्वदृशे वहाय विमोचितामराय वालिने वालिबन्धकाय व्यासाय व्यसनसक्ताय विराजसे वीरराये विबुधाग्र्यचराय विश्वाय वीराय वर्धनाय विरामाय अखिलभूतानांवर्धनाय आपदांवटाय वृषारूढाय विवस्वते वृषशास्त्रे वृषध्वजाय वृषक्षेत्राय विशालाक्षाय विमन्यवे विशदाशयाय विभीषणाय विशेषज्ञाय विज्ञानिने विमर्शकाय विकल्पकल्पिताय वीणावादनैकरताय वणिजे वाग्गिनवीननाय वर्चसे वित्ताय वर्धकिरूपधृते वडवास्याय वरूथिने वसुधातलभूषणाय वसुन्धराधराय वर्मभृतांवरनिनादिताय वक्त्रे वणिताढ्याय व्रतवते व्रतसंयुताय वेदगर्भाय वादिरूपाय वासनाक्षयदाय वशिने शरणाय शरधृते शर्मणे शशिभूषितशेखराय शरीरधृतभूमये शरभाय शशिशीतलाय शीतलामलदेहश्रिये शीतांशुनयनोज्ज्वलाय श्रीपर्णाय शर्मदाय शम्भवे श्रीस्तुताय शलभाय शलाय शशिबिन्दवे शमीगर्भाय शब्दब्रह्मणे शचीपतये शिवाय शरभुवे शार्ङ्गधन्वने (त०) ॐशांतमनसेस्वाहा ९०० ॥ शमाय शिखियानाय शिखिने शैलगर्भवासिने शिवात्मजाय शल्यहारिणे शूलपाणये शीलभुवे शूलरोगहृते शल्यस्तुताय शरासङ्गधुतारये शवलाय शमिने शशाय शङ्करकीर्तये शान्तात्मने शम्वलापहाय शम्बलाग्रामवासिने शंवाहाय शमभुवे शिशवे श्मशाननिलयाय श्वेतच्छवये शक्तिशयाय शिवाय

शनिपीडापहाय शङ्कुकीलिने शवरस्तुताय षाण्मातुराय षड्वक्त्राय सहनाय सहजाय सुहृदे सहस्रदाय सहस्राक्षाय सद्भूतये सद्गतये सदसे सेनाभर्त्रे सभारताय सर्वभूतावसानभुवे सर्वाय सर्गाय सन्मात्राय सिद्धसेवितपद्युगाय सिद्धिदाय साधकाय सिद्धाय सुरासुरनमस्कृताय सुरासुरबलत्रात्रे सुरासुरबलापहाय सप्तस्वराच्र्यकीर्त्तये सप्तलोकैकसंश्रयाय सप्तसप्तिसुतेजसे सुकलाय सकलार्तिहृते सर्वावासाय सर्गबीजाय सिन्धुशायिने स्वदाय स्वभुवे सदोद्योगिने सुलीलाय सद्भूतये सर्गभावनाय स्वभावाय सर्वगाय सन्धये सदसत्पतये सामोदाय सुभगाय सत्याय सर्वाधारिणे सभूतपाय सदेवासुरसंघाताय सहस्रांशुकिरीटधृते सञ्ज्ञाय सङ्कलितालोकाय सर्वभूतसमाश्रयाय सद्भोगनिलयाय सन्धये सङ्गीतागमविश्रुताय साहित्यामृततृप्ताय सौहित्याशिने सुरेश्वराय सत्ववन्द्याय सत्त्वधाम्ने सर्वमङ्गलसंश्रयाय सुधिये सत्सुलभाय सङ्गविकलाय सुविशारदाय हरात्मजाय हताशङ्काय हयेश्वाय हलिपूजिताय हनूमत्संस्तुताय हालापानसक्ताय हरीश्वराय हिरण्यकवचाय आपदांहन्त्रे हाभाय हतास्वराय हेतिहस्ताय हयाय हालाय हयगाय (तेजोऽसि) ॐहारभूषितायस्वाहा ॥ १००८ ॥ अथ सहस्रनामस्तोत्रम् ॥

ॐ भैरवउवाच ॥ कुमारः कवची कन्दः कर्मठः कलिकालजित् । कन्दर्परूपः कामेशः कालपुत्रः कलाधरः ॥ कलङ्करहितः कालकलनः कलिकालिकः । कलाकलितकः कामी कामनाशः

करास्पदः ॥ कठोरचित्तः कलशी कलः कलकलाकरः । करीरनीलः किञ्जल्ककलितः कोकिलालपः ॥ करिवक्त्राग्रगः कीलाजटः कलिलनाशनः । कोलपूज्यः कीलमोक्षः कपिलः कपिलाननः ॥ कलकलः कलालापः कन्दर्पी कपटापहः । कः कं केनः कपेन्द्रास्यः कपिः कपिलरूपधृत् ॥ कीनाशनाशः कङ्कालधारी कक्कोलभक्षकः । कपाली कमलाकान्तः कमलः कोशवर्धनः ॥ कीरवाक्क्रूरहाक्रूरः कूर्मपृष्टःक्रमोऽक्रमः । क्रौञ्चारिः क्रकचोदीर्णः कृत्तिवासः कृती कृतम् ॥ करालः कुलसम्पूज्यः कूलहा कुलचेतनः । क्रव्याद्गणपरीवारः क्रव्यादः कदलीमृदुः ॥ कलापियानः कुकरः कारुः कारी करः कुरः । कल्लोलदोःकटीनग्नः कोटिदः कोटितत्परः ॥ कटकी कटवः कोट्टस्थानः करभवर्तनः । कालरूपः कम्बुगलः करिगः कलगः करी ॥ कर्मीरः कल्मषः कराठी कृतज्ञः कृत्तिभास्वरः । कुवेरबन्धुः काशीपः कृशमध्यः कृशानुदृक् ॥ कुराडलयलङ्कृतः केशचराः कचमणिः कचः । कश्मीरनिलयः कम्पश्चराचरगुरुश्चरः ॥ चलाचलश्चलज्जिह्वश्चम्पापतिश्चमूपतिः । चषालनिलयश्चराडीप्रियपुत्रश्चयश्चुपः ॥ चमूरचर्मवासी च चमकश्चमरीगतिः । चपलाद्युतिभृच्चराडश्चराडालक्षपणश्चहः ॥ चकोरनेत्रश्चेलासश्चमसी चीनवस्त्रभृत् । चार्वाङ्गश्चीरवांश्चन्द्रकलाकलितशेखरः ॥ चन्द्रशीतश्चन्द्रद्योती चन्द्रकावृतदेहभृत् । चन्दनालेपनश्चन्द्रश्चन्द्रशेखरलालितः ॥ चाणूरमर्दनश्चक्रधारी चक्रवरानतः । चक्रमध्यगतश्चक्री चाक्रिकश्चराडविग्रहः ॥ चम्पकालङ्कृतश्चारनेत्र

ललालकः । चलद्भ्रूश्चीभनश्चारुश्चौरहा चोलपूजितः ॥ चरित्रचञ्चु-
ग्रण्डीशशास्ता चामरचर्चितः । चलनीलगतिश्चोष्यास्वदुज्ञश्चु-
ञ्चकश्चलः ॥ चलाक्षश्चपनोन्माथी चम्पीयधवलश्चकः । चम्पूस्त-
यश्चारकश्चचरकज्ञनिषेवितः ॥ चाणिक्यकुशलश्चित्रश्चित्रकर्मा च च-
र्मभृत् । चलुम्पकश्च चण्डांशुश्चामीकरनिभाननः ॥ चटत्कारकृता
रावश्चण्डीवन्द्यश्चलालिकः । चतुर्थीप्रियपूर्वश्च चतुर्थीप्रियपालनः ॥
चतुरश्चतुराङ्गाढ्यश्चतुष्पथकृतालयः । चतुरव्रतपूज्यश्च चतूरश्चर-
णार्चितः ॥ चञ्चरीककृतालापश्चिरध्येयश्चिरातृपः । चञ्चुरश्चोद्यक-
र्ता च चोदकश्चोदनाप्रियः ॥ चुलकाचमकश्चित्रचित्रकाङ्कितगोधि-
कः । चित्राङ्गदश्चित्रभूषश्चित्ताभस्मानुलेपनः ॥ चिन्तानाशकरश्चित्त
सुखदश्चित्तपद्मभूः । चतुरात्माचतुर्बाहुश्चतुर्व्यूहश्चतुर्मुखः ॥ चतुरथक
रश्चार्वीगम्यश्च चतुरक्षरः । अनादिरगदोऽनन्तोऽजरोक्षरविचरकः ॥
अप्रमेयोऽन्तरङ्गोऽणुरनूनोऽनवरोऽनघः । अघहाऽनघचिन्त्यश्च अघा
सुरनिसूदनः ॥ अघस्थिरोऽगस्त्यनतोऽबलाबलददोऽवनः । अमो
घविक्रमोगम्योऽनुत्तानोनुत्तरोपरः । अपारोऽकृत्रिमाचारो पारावा
रगभीरधीः ॥ अतर्क्योनर्घ्यमाहात्म्योऽनेकाधारोलयोरिधृत् । अ
त्रस्नुरगजाभर्ताऽगेशयोङ्गार्धवाशितः ॥ असङ्गोविभ्रमो भङ्गोन्धघ्नो-
ब्जाधृतशेखरः । अलङ्घ्योतीन्द्रियातीन्द्रो गोजावञ्चनपेशलः ॥
अस्तभ्यमूर्तिरन्तज्ञोनन्तार्चितपदद्वयः । अचेतयश्चाक्षरोकोपोकुसृति
रमलाम्बरः । अङ्गार्पितप्रदाकुश्च अचलाटनतत्परः ॥ अमोघविक्र-
मोमर्त्यस्तुतोऽमृतपदोऽपदः । अमरार्पितसद्भोगोभवोम्बुजकृतासनः ।

अम्बुजार्चितपादाब्जोऽरजोऽफल्गुमनोरथः। अहीनबाहुरआद्यो ही नाहितविभूषणः॥ अहीनभोगदोऽभोगोंसपीठधृतभूतिकः। अग्राङ्ग- नोङ्गदोनङ्गप्रीतिकृदऽगजार्चितः॥ अग्रगण्यो महामात्योमदोद्म- विभेदकः। अघोषघोष्यो घोरश्च अमलामलविग्रहः॥ अग्रदर्श्यग्र- माताचानलसोलसकोपनः। अनेककोटिदो कोटिरक्तोलक्ष्यरूपकः ॥ अमृताशोऽमृतांशुश्चाप्यमृतेश्वर एवच। अमृतांशप्रसन्नश्च अमरे शोमरारिहा॥ अकल्यकलहोकल्योमूर्तआनन्दविग्रहः। आलेक आप्लवोप्याल आनन्देश्वर एवच॥ आम्नायोथागमज्ञेय आचारनि धिरेवच। आज्ञाधरोथाज्यभोग इनश्चेभमुखस्तथा॥ इन्द्रइन्दुक- लाधारी इन्द्रजालपटुस्तथा। ईड्यईशान ईरीच तालाङ्कस्ताल- विग्रहः॥ तलातलगतोमाली माल्यवान्ककुदी तथा। कलङ्कहा कपाली च कालिकारमणस्तथा॥ करालरूपः कालाग्निः शिखा वाञ्छिखिवाहनः। शिरीषकोमलाङ्गश्च करीराभः करीरभृत्॥ कनकाङ्गददोर्दण्डः कनकाशो जयीतथा। जालन्धररिपुस्तार- स्तारकान्तक एवच॥ तारकस्तारवादी च तारस्तारकराजजित् । तरिस्तरुणरूपीच तरुशायी जटान्तकः॥ तात्पर्यज्ञस्तलोन्मा थी तारापतिरथोतलः। तलिनं च तडागश्च ततरूपश्च तारदृक्॥ तुलाहीनोथ तालज्ञस्तुहिनांशुस्तुतालिकः। स्तोत्रं स्तुन्दिलरूपश्च तुहिनाचलसंश्रयः॥ तोतुलाप्रियकारीच तालुस्तौतिलरूपकः। तुलापुरुषसंवादस्तर्कगम्यस्तलोज्झितः॥ तालज्ञानरतस्तापहन्ता तरणिरेवच। तपोवनरतस्तुण्डिस्तुतस्तापन एवच॥ तमालवन-

चारीच तिलकस्ततविश्रकः । तमीभर्ता तमोहन्ता तामसस्तुमलप्रियः । त्वङ्गनस्तङ्गनस्तत्व तमोरिस्त्वचिसारकः । ताम्राक्षस्त्र्यम्बक स्त्र्यक्षस्तीक्ष्णज्योतिस्त्रिबन्धुहृत् ॥ त्रिपुरारिस्त्रिमूर्तीशस्तृतीयपद-संश्रयः । त्रिबन्धुस्त्रिपुराधीशस्तृतीयनयनोज्ज्वलः ॥ त्रिपदासा रगेयश्चत्रिपुटीशरणं तथा । पवनः पालकः पालीपाणिः पाल्यग्र णीः पटुः ॥ पातालालयहा पानसक्तः पङ्कजलोचनः । पलायनप रः पीठसंस्थितापीठपूजितः ॥ पुरोहितः पुरोग्रामी पुरारातिः पुरे श्वरः । प्रवीणः पुण्यदृक्पूततनुः पर्वतसंश्रयः ॥ परीक्षकः पुराणज्ञः प्रमाणंप्रत्ययः प्रमा । प्रमाता परमंधाम परंब्रह्म पराश्रयः ॥ पराप रगतिः पारः पुराणपुरुषः परम् । प्रकृतिप्रभवः पाता प्रलयः प-द्मविष्टरः ॥ पद्माक्षः पद्मभूः पार्थवरदः पार्थिवः पणः । परापतिःप रेशानः पुरुषश्चपितामहः ॥ पीनवक्षाःपीतवपुः पत्रिगः पथिकः पतः । पुरोळाशरतः पान्थः परेता वृतएवच ॥ पाशीपालशहस्तश्च पद्माङ्कः परमेश्वरः । पुराणगम्यःपूतश्च पुष्पपूज्यः पुरेशयः ॥ प्रद्युम्नःपुष्पबाणश्च पूज्यःपुष्पशिखीमयः । परमेष्ठी प्रकृतीष्टः परा-परकृतास्पदः ॥ पूर्वः पौलस्त्यवरदः पौलोमीकुचमर्दनः । प्रजापा लः प्रजालोपी पूतनान्तक एवच ॥ पूतनामा पान्थतोषी पर्यङ्कश-यनः पटः । परमायुः पशुपतिः पल्लीवासी परायणः ॥ प्रमोदी प त्तनं पर्व पवित्रं पात्रमेवच । पालनः सर्वभूतानां पूर्णः पूरयिता प तिः ॥ पुण्यकीर्तिश्च पापघ्नः पविहस्तश्च पक्षिराट् । पतङ्गधामा पूर्णांशः पतगेशः प्रशान्तधीः ॥ याज्यो यजनपूज्यश्च यष्टायक्षप्रियो

यमः । यमाप्यो ययुरूपश्च यायी यानरतो ययी ॥ यानयानग-
तियोगी यमलोकैकशासनः । यशस्वी यापनो यामो योगेन्द्रो या
ज्ञिकप्रियः ॥ यन्ता यशोधरो यज्वा यक्षेशो यामलागमः । योद्धा
युगैकनिलयो युगलं युगनामभृत् ॥ योजनाप्यो यागगम्यो य
ज्ञभुग्यजतां वरः । यायजूको यज्ञगोपा युगवर्ती यमात्मकः ॥ य
ज्ञघ्नो यमभीतिघ्नो यमारिर्यक्षपालकः । यूपो लक्ष्मीधरो लास्यो
ललितो ललितागमः ॥ लम्बोदराच्यो लज्जावाञ्छाभदो ललितान-
नः । लङ्केशार्चितपत्पद्मो ललनाललितो ललः ॥ लक्ष्यो ललि
तदेहश्च लाक्षारुणपदद्वयः । लयेशो लङ्घितारातिर्लिङ्गरूपी लता
श्रयः ॥ लम्बनो लघुचेष्टश्च रतीशाभो रतिप्रियः । रमणो राक्ष
सेन्द्रघ्नो रक्षोधिपसुपूजितः ॥ राकापतिवपू राजा रमापतिवरप्र-
दः । राजराजार्चितो रात्रिधवाङ्कितकलेवरः ॥ रामपूज्यो रा-
मस्पर्धी रेवतीजानिपूजितः । रेवारतो राज्यप्रदो रावणारातिपू
जितः ॥ रसातलगतो रामो रमणीरामकोपिच । रात्रिनाथान-
नो रङ्गनर्तको रणकत्थनः ॥ रालाच्यो रक्तनेत्रश्च रसज्ञो रसव-
ल्लभः । रमाप्रियो रावणाच्यो रामेशो रामवल्लभः ॥ रोहिणी
शो रमाभर्ता रसनो रभसप्रियः । रणार्जितयशा रक्तनेत्रो रक्त
वासनः ॥ रतीशदेहदाही च रतिज्ञो रसभाववित् । रोहिताश्वो रत्नमौ
लिरिङ्गनोपोभसद्गतिः ॥ इननेत्र इलापुत्र ईशानः सर्वकर्मणाम्
। ईड्य ईश्वरपुत्रश्च ईप्सितार्थफलप्रदः ॥ ईतिभङ्गश्चखलहा खल
पूः खलपावनः । खसत्तांकः खसूतिश्च खगतिः खचरेश्वरः ॥ ख

भालतलाङ्कितकलोज्ज्वलः ॥ भामाप्रियो भस्मरूक्षो भमाली भग माल्यपि । भगी भगवदीड्यश्च भुवनेशो भगौघ्र्यकृत् ॥ भोगी भोगिविभूषश्च भूशायी भारहापि च । भूतप्रभुश्च भूतीशो भगनेत्र हरो भपः ॥ भानुर्भाभूमिशायो च भूतिदायी भुवोगतिः । भोगास्पदं भूपवन्द्यो भोगिकङ्कण एवच ॥ भौमासुरप्रमाथीच भौमपीडानिवारणः । भौमदेवो भूमिदेवभक्तिपूजितपत्कजः ॥ भूमिद्वारं मतिमन्ता मरणत्रासकारकः । महिषासुरघाती च महिषासनभीतिदः ॥ मननाध्यो मनोध्येयोमतिमान्मननप्रियः । मनोरथपथातीतो मनोरथगतिप्रदः । मनोभिरामो मान्यश्च महेश्वासो महाकृपः । महीभरणदक्षश्च महाभीतिप्रभञ्जनः । मुनिर्मननशीलश्च मुनीनां त्राणकारणम् । मरुज्ज्येष्टो मरुत्वांश्च मरुपातामृतापहः ॥ मठाश्रयो मणिस्थानो मञ्जीरध्वनिसङ्गतः । महाशयो महाशश्च महादेहो महातपाः । महाचरितचञ्चुश्च महाश्चर्यनिधिर्महः । महनीयपदद्वन्द्वो महानीतिर्महागुणः । महाधृतिर्महाशान्तो महीभरणतत्परः । मयूरपृष्टगो मन्त्रिग्रामणीर्मन्त्रपारगः । महासीनो महाचित्तो महानन्दो महोदयः । वाजिकृतारियूगश्च वाजपेयैकसाधकः । वानप्रस्थार्च्यपत्पीठो वरणीयोमलात्मनाम् । वृन्दारकोत्तमो वन्यवृत्तिर्वननवञ्चकः । वन्दारुगम्यो वृन्दश्रीर्वनमाली विशांपतिः । वनेचराग्रणीर्वन्द्यचरणो वनपालकः । वसुर्वसुप्रदो वस्तुसाधको वास्तुपूजितः । वासिन्तीवासितोवल्गत्पाणिर्वचनसौख्यदः । वल्लीव्रततिगुप्तात्मा वामनो वामलोचनः । विशुद्धात्मा विरूपश्च विस्ता

मूर्धा खमणिः खड्गहस्तः खचरलोचनः । खगयानो गणेशानो ग
जासुरनिसूदनः ॥ गमागमविहीनश्च गमागमविशेषकः । गमा
गमातिगज्ञेयो गाङ्गेयो गणसूर्गणः ॥ गम्भीरनिनदोगेयप्रियो गुरु-
विशेषितः । गरीयान्गहनंगण्डमाली गुणागणार्चितः ॥ गुणयो ग
णकपूज्यश्च गगनामलसत्त्वधृत् । गङ्गालयो गङ्गपतिर्गुहावासी
गिरिप्रियः ॥ गतिःसंन्यासतत्त्वानां गम्यो गतपरात्मनाम् । ग
यादितीर्थसङ्घानां पावनो गतिमान्गतिः ॥ घस्मरो घुसृणलेपी घृ-
णी घृतभुजार्चितः । घृणिमान्घर्षणोऽघानां घनाघनरवो घनः ॥
घनवाद्यरतःच्छन्दः छविमांश्छिदुरोहसाम् । छन्दसां च्छन्दरूपश्च
जरातीतो जपप्रियः ॥ जपाकुसुमसङ्काशोजनपालो जलेश्वरः ।
जालन्धरधरो जाली जालन्धरनिषूदनः ॥ जाज्वल्यमानतेजा-
श्च जगतीशो जनातिगः । जम्भारातिप्रियो जम्बूप्रसूनाभरणो ज
टी ॥ जाबालवेशप्रच्छन्नोजजशाली जटापहः । जाड्यहाजङ्ग
लावासी जन्मसाफल्यदो नृणाम् ॥ जवनो जीवनं जीवप्राणदो
जयतांवरः । जल्पाकोजनजन्मादिर्जलदाश्रय एवच ॥ जलदो
जर्जरीवाद्यरतोझङ्कार एवच । झरप्रवाह्योढक्काढ्यो फणत्कार
प्रियस्तथा ॥ वन्धुरो वन्धुराङ्गश्च वन्धमोचनतत्परः । वालखि
ल्याग्रणीर्बन्धुप्रियो वधरसंश्रयी ॥ वलिप्रियो वलारातिरतिदो
वहुदो वहुः । वाहुभूष्यो वलिघ्नश्च बलासुरनिषूदनः ॥ बलदो व
लिनांश्रेष्टो वलिष्टो वलिदायकः । वाहुलो वलिदर्पघ्नो वहुलावलहो
वली ॥ वकासुरप्रमाथोच वकपत्री बलोज्ज्वलः । भासुरो भास्करो

रो विग्रही विषः ॥ विकृतो विश्वरूपश्च विख्यातो विश्वदृग्वहः । विमोचितामरो वाली वालिबन्धकएवच ॥ व्यासो व्यसनसक्तश्च विरजा वीरणीस्तथा । विबुधाग्र्यचरो विश्वो वीरो वर्धनएवच ॥ विरामोखिलभूतानां वर्धनश्चापदांवटः। वृषारूढो विवस्वांश्च वृषशास्तावृषध्वजः ॥ विश्वक्षेत्रो विशालाक्षो विमन्युर्विशदाशयः । विभीषणो विशेषज्ञो विज्ञानी च विमर्शकः ॥ विकल्पकल्पितावीणावादनैकरतो वणिक् । वाणिनीवननो वर्चो वित्तो वार्धकिरूपधृत् ॥ वाडवास्यो वरूथी च वरधातलरूपरम् । वसुन्धराधरो वर्मभूतांवरनिनादितः ॥ वक्ता च वनिताढ्यश्च व्रतवान्व्रतसंयुतः । वेदगर्भो वादिरूपो वासनाक्षयदो वशी ॥ शरणं शरधच्छर्म शशिभूषितशेखरः । शरीरधृतभूमिश्च शरभः शशिशीतलः ॥ शीतलामलदेहश्रीः शीतांशुनयनोज्ज्वलः । श्रीपर्णः शर्मदः शम्भुः श्रीस्तुतः शलभः शलः ।। शशिविन्दुः शमीगर्भःशब्दब्रह्म शचीपतिः । शिवश्च शरभूः शार्ङ्गधन्वा शान्तमनाः शमः । शिखियानः शिखी शैलगर्भवासी शिवात्मजः ॥ शल्यहारी शूलपाणिः शूलभूः शूलरोगहृत् ॥ शल्यस्तुतः शरासङ्घुतारिङ्वलः शमी । शशः शङ्करकीर्तिश्च शान्तात्मा शम्वलापहः ॥ शम्वलाग्रामवासी च शंवाहः शमभूः शिशुः।। श्मशाननिलयः श्वेतच्छविः शक्तिमयः शिवः ॥ शनिपीडापहः शङ्कुकीली शवरसंस्तुतः। षाण्मातुरश्च षड्वक्त्रः सहनसहजः सुहृत् ॥ सहस्रदः सहस्राक्षः सद्गतिः सद्गतिः सदः। सेनाभर्तृसभारलं सर्वभूतावसानभूः ।। सर्वः सर्गश्च सन्मात्रं सिद्धसेवितपद्युगः।

सिद्धिदः साधकः सिद्धः सुरासुरनमस्कृतः ॥ सुरासुरबलत्राता सुरासुरबलापहः। सप्तस्वराच्र्यकीर्तिश्च सप्तलोकैकसंश्रयः ॥सप्तसप्ति-सुतेजाश्च सुकलःसकलार्तिहृत् ॥सर्वावासः सर्ववीजं सिन्धुशायी स्वदः स्वभूः ॥ सदोद्योगी सुलीलश्च सद्भूतिः सर्गभावनः। स्वभावः सर्वगः सन्धिः सदसत्पतिरेवच ॥ सामोदः सुभगः सत्यः सर्वाधारः सभूतपः। सदेवासुरसङ्गीतः सहस्रांशुकिरीटधृत् ॥ सज्ज :संकलिता-लोकः सर्वभूतसमाश्रयः।सद्भोगनिलयः सिन्धुः सङ्गीतागमविश्रुतः ॥ साहित्यामृततृप्तश्च सौहित्याशी सुरेश्वरः । सत्त्ववन्द्यः सत्वधामा सर्वमङ्गलसंश्रयः ॥ सुधीः सत्सुलभः सङ्गविकलः सुविशारदः। हरात्मजो हताशङ्को हर्यश्वो हलिपूजितः । हनूमत्संस्तुतो हालापा-नसक्तो हरीश्वरः । हिरण्यकवचो हन्ताऽपदां हाभो हतास्वरः ॥ हेतिहस्तो हयो हालो हयगो हारभूषितः ॥ इत्येवं कार्तिकेयस्य
८। सर्वागमरहस्यकम् । नाम्नामष्टाभिरधिकं सहस्रं सत्फलप्रदम् ॥ अवाप्नुवन्ति तत्सर्वपाठेनास्य मनीषिणः। भूतप्रेतपिषाचाद्या दूरादेवक्षयन्ति हि ॥ नतादृग्जायतेनर्थं लोके किञ्चन भूतजम् । यादृशी विघ्नशान्त्यर्थं शक्तिरस्य मता सताम् ॥ तस्मान्निः संशयोभत्वा धर्मकामार्थसिद्धये स्वामिनः कार्तिकेयस्य पठेन्नाम्नां सहस्रकम् ।

इतिस्वामिकार्तिकेयसहस्रनामाभिधं चतुर्थाङ्गं समाप्तम् ॥

# ॐ अथ भवानीनामसहस्रस्तोत्रम् ।

## नामावली च ॥

ॐनमो भवान्यै ॥ अरिशङ्खकृपाणखेटबाणान् सुधनुः शूलकतर्जनीं दधाना । भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥ ॥ ॐशङ्खत्रिशूलशरचापकरां त्रिनेत्रां तिग्मेतरांशुकलया विकसत्किरीटाम् । सिंहस्थितामसुरसिद्धनुतां च दुर्गां दूर्वानिभां दुरितदुःखहरां नमामि ॥ ॥ अकुलकुलपतन्ती चक्रमध्ये स्फुरन्ती । मधुरमधुपिबन्ती कण्टकान्भक्षयन्ती । दुरितमपहरन्ती साधकान्पोषयन्ती । जयति जगति देवी सुन्दरी क्रीडयन्ती ॥ ॥ चतुर्भुजामेकवक्त्रां पूर्णेन्दुवदनप्रभाम् । खड्गशक्तिधरां देवीं वरदाभयपाणिकाम् ॥ प्रेतसंस्थां महारौद्रीं भुजगेनोपवीतिनीम् । भवानीं कालसंहारबद्धमुद्राविभूषिताम् ॥ जगत्स्थितिकरीं ब्रह्मविष्णुरुद्रादिभिः सुरैः । स्तुतां तां परमेशानीं नौम्यहं विघ्नहारिणीम् ॥ ॥ ॐनमो भवान्यै ॥ कैलासशिखरे रम्ये देवदेवं महेश्वरम् । ध्यानोपरतमासीनं प्रसन्नमुखपङ्कजम् ॥ सुरासुरशिरोरत्नरञ्जिताङ्घ्रियुगं प्रभुम् । प्रणम्य शिरसा नन्दी बद्धाञ्जलिरभाषत ॥ ॥ श्रीनन्दिकेश्वर उवाच ॥ ॥ देवदेव जगन्नाथ संशयोस्ति महान्मम । रहस्यमेकमिच्छामि प्रष्टुं त्वां भक्तिवत्सलम् ॥ देवतायास्त्वया कस्याः स्तोत्रमेतद्दिवानिशम् । पठ्यतेऽविरतं नाथ! त्वत्तः किमपरः परः ॥ इति पृष्टस्तदा देवो नन्दिकेन जगद्गुरुः ।

प्रोवाच भगवानेको विकसन्नेत्रपङ्कजः ॥ ॥ श्रीभगवानुवाच ॥
साधु साधु गणश्रेष्ठ पृष्टवानसि मां च यत् । स्कन्दस्यापि च
यद्गोप्यं रहस्यं कथयामि तत् ॥ पुरा कल्पक्षये लोकान्सिसृक्षु-
र्मूढचेतना । गुणत्रयमयी शक्तिर्मूलप्रकृतिसंज्ञिता ॥ तस्यामहं
समुत्पन्नस्तत्त्वैस्तैर्महदादिभिः । चेतनेति ततः शक्तिर्मां काप्या-
लिङ्ग्य तस्थुषी । हेतुः सङ्कल्पजालस्य मनोधिष्ठायिनी शुभा ॥
इच्छेति परमा शक्तिरुन्मिमील ततः परम् । ततो वागिति
विख्याता शक्तिः शब्दमयी परा ॥ प्रादुरासीज्जगन्माता वेद-
माता सरस्वती । ब्राह्मी च वैष्णवी रौद्री कौमारी पार्वती शिवा ॥
सिद्धिदा बुद्धिदा शान्ता सर्वमङ्गलदायिनी ॥ तयैतत्सृज्यते
विश्वमनाधारं च धार्यते ॥ तयैतत्पाल्यते सर्वं तस्यामेव प्रली-
यते । अर्चिता प्रणता ध्याता सर्वभावविनिश्चिता ॥ आराधिता
स्तुता सैव सर्वसिद्धिप्रदायिनी । तस्या अनुग्रहादेव तामेव
स्तुतवानहम् ॥ सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः ।
स्तवेनानेन सन्तुष्टा मामेव प्रविवेश सा ॥ तदारभ्य मया
प्राप्तमैश्वर्यं पदमुत्तमम् । तत्प्रभावान्मया सृष्टं जगदेतच्चराचरम् ॥
ससुरासुरगन्धर्वयक्षराक्षसमानवम् । सपन्नगं ससमुद्रं सशैलव-
नकाननम् ॥ सराशिग्रहनक्षत्रं पञ्चभूतगुणान्वितम् । नन्दि-
न्नामसहस्रेण स्तवेनानेन सर्वदा ॥ स्तुवे परापरां शक्तिं ममानु-
ग्रहकारिणीम् । इत्युक्त्वोपरतं देवं चराचरगुरुं विभुम् । प्रणम्य
शिरसा नन्दी प्रोवाच परमेश्वरम् ॥ ॥ श्रीनन्दिकेश्वर उवाच ॥
॥ भगवन्देवदेवेश लोकनाथ जगत्पते । भक्तोऽस्मि तव दासोऽस्मि
प्रसादः क्रियतां मयि । देव्याः स्तवमिमं पुण्यं दुर्लभं यत्सुरै-

रपि । श्रोतुमिच्छाम्यहं देव प्रभावमपि चास्य तु ॥ ॥ श्रीभगवानुवाच ॥ ॥ शृणु नन्दिन्महाभाग स्तवराजमिमं शुभम् । सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम् । शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः । त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्तवः ॥ ॥ अस्य श्रीभवानीनामसहस्रस्तवराजस्य, महादेव-ऋषिः, अनुष्टुप्छन्दः, आद्या शक्तिः, भगवती भवानी देवता, ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं, अमुककामनासिद्ध्यर्थे पाठे होमे वा विनियोगः ॥ अथ करन्यासः ॥ ॐ एकवीरायै अङ्गुष्ठाभ्यां नमः ॐ महामायायै तर्जनीभ्यां नमः, ॐ पार्वत्यै मध्यमाभ्यां नमः ॐ गिरिशप्रियायै अनामिकाभ्यांनमः, ॐ गौर्यै कनिष्ठिकाभ्यां नमः, करालिन्यै करतलकरपृष्ठाभ्यां नमः ॥ ॥ अथ षडङ्गन्यासः ॥ ॐ एकवीरायै हृदयायनमः, ॐ महामायायै शिरसे स्वाहा, ॐ पार्वत्यै शिखायै वषट्, ॐ गिरिशप्रियायै कवचायहुम्, ॐ गौर्यै नेत्रत्रयाय वौषट्, ॐ करालिन्यै अस्त्रायफट् ॥ प्राणायामः ॥ ॥ ध्यानम् ॥ बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् । पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां भजे ॥ १ ॥ अर्धेन्दुमौलिममलाममराभिवन्द्यामम्भोजपाशसृणिरक्तकपालहस्ताम् । रक्ताङ्गरागरशनाभरणां त्रिनेत्रां ध्यायेशिवस्य वनितां मधुविह्वलाङ्गीम् ॥ ॥ बीजत्रयाय विद्महे तत्प्रधानाय धीमहि, तन्नः शक्तिः प्रचोदयात् ॥ २ ॥ मूलम् । "ॐ श्रींश्रींॐॐह्रींश्रींश्रीं भवानि हुं फट् स्वाहा" ॥ १०८ ॥

---

॥ श्रीईश्वर उवाच ॥

ॐमहाविद्या जगन्माता महालक्ष्मीः शिवप्रिया । विष्णुमाया शुभा शान्ता सिद्धा सिद्धसरस्वती । क्षमा कान्तिः प्रभा ज्योत्स्ना पार्वती सर्वमङ्गला । हिङ्गुला चण्डिका दान्ता पद्मा लक्ष्मीर्हरिप्रिया । त्रिपुरानन्दिनी नन्दा सुनन्दा सुरवन्दिता । यज्ञविद्या महामाया वेदमाता सुधाधृतिः । प्रीतिप्रिया प्रसिद्धा च मृडानी विन्ध्यवासिनी । सिद्धविद्या महाशक्तिः पृथ्वी नारदसेविता । पुरुहूतप्रिया कान्ता कामिनी पद्मलोचना । प्रह्लादिनी महामाता दुर्गा दुर्ग-

ॐ महाविद्यायैस्वाहा, जगन्मात्रे, महालक्ष्म्यै, शिवप्रियायै, विष्णुमायायै, शुभायै, शान्तायै, सिद्धायै, सिद्धसरस्वत्यै, क्षमायै, कान्त्यै, प्रभायै, ज्योत्स्नायै, पार्वत्यै, सर्वमङ्गलायै, हिङ्गुलायै, चण्डिकायै, दान्तायै, पद्मायै, लक्ष्म्यै, हरिप्रियायै, त्रिपुरानन्दिन्यै, नन्दायै, सुनन्दायै, सुरवन्दितायै, यज्ञविद्यायै, महामायायै, वेदमात्रे, सुधाधृत्यै, प्रीतिप्रियायै, प्रसिद्धायै, मृडान्यै, विन्ध्यवासिन्यै, सिद्धविद्यायै, महाशक्त्यै, पृथ्व्यै, नारदसेवितायै, पुरुहूतप्रियायै, कान्तायै, कामिन्यै, पद्मलोचनायै, प्रह्लादिन्यै, महामात्रे, दुर्गायै, दुर्गासुर-

तिनाशिनी । ज्वाला-
मुखी सुगोत्रा च ज्यो-
तिः कुमुदहासिनी ।
दुर्गमा दुर्लभा विद्या
स्वर्गतिः पुरवासिनी ।
अपर्णा शाम्बरी माया
मदिरा मृदुहासिनी ।
कुलवागीश्वरी नित्या-
नित्यक्लिन्ना कृशोद-
री। कामेश्वरी च नीला
च भीरुण्डा वह्निवा-
सिनी । लम्बोदरी म-
हाकाली विद्याविद्ये-
श्वरी तथा । नरेश्वरी
च सत्या च सर्वसौ-
भाग्यवर्धिनी । सङ्क-
र्षणी नारसिंही वैष्ण-
वी च महोदरी । का-
त्यायनी च चम्पा च
सर्वसम्पत्तिकारिणी ।
नारायणी महानिद्रा
योगनिद्रा प्रभावती ।
प्रज्ञापारमिता प्रज्ञा

शिन्यै, ज्वालामुख्यै सुगो-
त्रायै, ज्योतिषे, कुमुदहासि-
न्यै, दुर्गमायै, दुर्लभायै, वि-
द्यायै, स्वर्गतये, पुरवासिन्यै,
अपर्णायै, शाम्बरीमायायै,
मदिरायै, मृदुहासिन्यै, कुल-
वागीश्वर्यै, नित्यानित्यक्लिन्ना-
यै, कृशोदर्यै, कामेश्वर्यै, नी-
लायै, भीरुण्डायै, वह्निवा-
सिन्यै, लम्बोदर्यै, महाकाल्यै,
विद्याविद्येश्वर्यै, नरेश्वर्यै, स-
त्यायै, सर्वसौभाग्यवर्धिन्यै,
सङ्कर्षण्यै, नारसिंह्यै, वैष्णव्यै,
महोदर्यै, कात्यायन्यै, चम्पा-
यै, सर्वसम्पत्तिकारिण्यै, ना-
रायण्यै, महानिद्रायै, योग-
निद्रायै, प्रभावत्यै, प्रज्ञापार-
मितायै, प्रज्ञायै, तारायै, म-
धुमत्यै, मधवे, क्षीरार्णवसु-
तायै, हालायै, कालिकायै,
सिंहवाहनायै, ॐकारायै, सु-

तारा मधुमती मधु ।
क्षीरार्णवसुता हाला
कालिका सिंहवाहना ।
ॐकारा च सुधाहारा
चेतना कोपना कृतिः ।
अर्धबिन्दुधरा धीरा
विश्वमाता कलावती
१०० । पद्मावती सु-
वस्त्रा च प्रबुद्धा च
सरस्वती । कुण्डासना
जगद्धात्री बुद्धमाता
जिनेश्वरी । जिनमाता
जिनेन्द्रा च शारदा
हंसवाहना । राज्यल-
क्ष्मीर्वषट्कारा सुधाका-
रासुधात्मिका । राज-
नीतिस्त्रयीवार्ता दण्ड-
नीतिः क्रियावती ।
सद्भूतिस्तारिणी श्रद्धा
सद्गतिः सत्परायणा ।
सिन्धुर्मन्दाकिनी गङ्गा
यमुना च सरस्वती ।
गोदावरी विपाशा च
कावेरी च शतह्रदा ।

धाहारायै, चेतनायै, कोपना
यै, कृत्यै, अर्धबिन्दुधरायै, धी
रायै विश्वमात्रे, "तेजोऽसि"
कलावत्यै, १०० ध्यानम् । वरा-
ङ्कुशौ पाशमभीतिमुद्रां करै
र्वहन्तीं कमलासनस्थाम् । बा
लार्ककोटिप्रतिमां त्रिनेत्रां भ
जेऽहमाद्यां भुवनेश्वरीं ताम् ।
ॐपद्मावत्यैस्वाहा, सुवस्त्रायै,
प्रबुद्धायै, सरस्वत्यै, कुण्डा
सनायै, जगद्धात्र्यै, बुद्धमात्रे,
जिनेश्वर्यै, जिनमात्रे, जिने
न्द्रायै, शारदायै, हंसवाह
नायै, राज्यलक्ष्म्यै, वषट्का
रायै, सुधाकारायै, सुधात्मि
कायै, राजनीत्यै, त्रयीवा
र्तायै, दण्डनीत्यै, क्रियावत्यै,
सद्भूतये, तारिण्यै, श्रद्धायै,
सद्गतये, सत्परायणायै, सि
न्धवे, मन्दाकिन्यै, गङ्गायै,
यमुनायै सरस्वत्यै, गो[illegible]
विपाशायै, कावेर्यै, [illegible]
दायै, सरय्वै, चन्द्र[illegible]

सरयूश्चन्द्रभागा च कौशिकी गण्डकी शुचिः । नर्मदा कर्मनाशा च चर्मण्वत्यथ देविका । वेत्रवती वितस्ता च वरदा नरवाहना । सती पतिव्रता साध्वी सुचक्षुः कुण्डवासिनी । एकचक्षुः सहस्राक्षी सुश्रेणिर्भगमालिनी । सेनाश्रेणिः पताका च सुव्यूहा युद्धकाङ्क्षिणी । पताकिनी दयारम्भा विपञ्ची पञ्चमप्रिया । परापरकलाकान्ता त्रिशक्तिर्मोक्षदायिनी । ऐन्द्री माहेश्वरी ब्राह्मी कौमारी कुलवासिनी । इच्छा भगवती शक्तिः कामधेनुः कृपावती । वज्रायुधा वज्रहस्ता चण्डी चण्डपराक्रमा । गौरी

कौशिक्यै, गण्डक्यै, शुचये, नर्मदायै, कर्मनाशायै, चर्मण्वत्यै, देविकायै, वेत्रवत्यै, वितस्तायै, वरदायै, नरवाहनायै, सत्यै, पतिव्रतायै, साध्व्यै, सुचक्षुषे, कुण्डवासिन्यै, एकचक्षुषे, सहस्राक्ष्यै, सुश्रेणये, भगमालिन्यै, सेनाश्रेणये, पताकायै, सुव्यूहायै, युद्धकाङ्क्षिण्यै, पताकिन्यै, दयारम्भायै, विपञ्च्यै, पञ्चमप्रियायै, परापरकलाकान्तायै, त्रिशक्तये, मोक्षदायिन्यै, ऐन्द्र्यै, माहेश्वर्यै, ब्राह्म्यै, कौमार्यै, कुलवासिन्यै, इच्छायै, भगवत्यै, शक्तये, कामधेनवे, कृपावत्यै, वज्रायुधायै, वज्रहस्तायै, चण्ड्यै, चण्डपराक्रमायै, गौर्यै, सुवर्णवर्णायै, स्थितिसंहारकारिण्यै, एकानेकायै, महेज्यायै, शतबाहवे, महाभुजायै, भुजङ्गभूषणायै,

सुवर्णवर्णा च स्थिति-
संहारकारिणी । एका-
नेका महेज्या च शत-
बाहुर्महाभुजा । भुज-
ङ्गभूषणा भूषा षट्चक्र-
क्रमवासिनी । षट्चक्र-
भेदिनी शूरा कायस्था
कायवर्जिता । सुस्मि-
ता सुमुखी क्षामा मू-
लप्रकृतिरीश्वरी । २००
अजा च बहुवर्णा च
पुरुषार्थप्रवर्तिनी । र-
क्ता नीला सिता श्या-
मा कृष्णा पीता च
कर्बुरा । क्षुधा तृष्णा
जरा वृद्धा तरुणी क-
रुणालया । कला काष्ठा
मुहूर्ता च निमेषा का-
लरूपिणी । सुवर्णर-
सनानासा चक्षुःस्पर्श-
वती रसा । गन्धप्रिया
सुगन्धा च सुस्पर्शा च
मनोगतिः । मृगना-
भिर्मृगाक्षी च कर्पूरा-

भूषायै, षट्चक्रक्रमवासिन्यै
षट्चक्रभेदिन्यै, शूरायै, काय
स्थायै, कायवर्जितायै, सु
स्मितायै, सुमुख्यै, क्षामायै,
मूलप्रकृतये, "तेजोसि" ईश्वर्यै,
"२०० माता भवानी च
पिता भवानी बन्धुर्भवानी च
गुरुर्भवानी । विद्या भवानी
द्रविणं भवानी यतो यतो
यामि ततो भवानी ॥" ॐ
अजायैस्वाहा, बहुवर्णायै, पु-
रुषार्थप्रवर्तिन्यै, रक्तायै, नी-
लायै, सितायै, श्यामायै,
कृष्णायै, पीतायै, कर्बुरायै,
क्षुधायै, तृष्णायै, जरायै, वृ-
द्धायै, तरुण्यै, करुणालयायै,
कलायै, काष्ठायै, मुहूर्तायै,
निमेषायै, कालरूपिण्यै, सुव-
र्णरसनानासायै, चक्षुःस्पर्श-
वत्यै, रसायै, गन्धप्रियायै
सुगन्धायै, सुस्पर्शायै, मनो-
गतये, मृगनाभये, मृगाक्ष्यै,
कर्पूरामोदधारिण्यै, पद्मयो-

मोद्धारिणी । पद्मयोनिः सुकेशी च सुलिङ्गा भगरूपिणी । योनिमुद्रा महामुद्रा खेचरी खगगामिनी । मधुश्रीर्माधवीवल्ली मधुमत्ता मदोद्धता । मातङ्गी शुकहस्ता च पुष्पबाणेक्षुचापिनी । रक्ताम्बरधरा क्षीबा रक्तपुष्पावतंसिनी । शुभ्राम्बरधरा धीरा महाश्वेता वसुप्रिया । सुवेणी पद्महस्ता च मुक्ताहारविभूषणा । कर्पूरामोदनिःश्वासा पद्मिनी पद्ममन्दिरा । खड्गिनी चक्रहस्ता च भुसुण्डी परिघायुधा । चापिनी पाशहस्ता च त्रिशूलवरधारिणी । सुबाणा शक्तिहस्ता च मयूरवरवाहना । वरायुधधरा वीरा वीरपा-

नये, सुकेश्यै, सुलिङ्गायै, भगरूपिण्यै, योनिमुद्रायै, महामुद्रायै, खेचर्यै, खगगामिन्यै, मधुश्रियै, माधवीवल्ल्यै, मधुमत्तायै, मदोद्धतायै, मातङ्ग्यै, शुकहस्तायै, पुष्पबाणायै, इक्षुचापिन्यै, रक्ताम्बरधरायै, क्षीबायै, रक्तपुष्पावतंसिन्यै, शुभ्राम्बरधरायै, धीरायै, महाश्वेतायै, वसुप्रियायै, सुवेण्यै, पद्महस्तायै, मुक्ताहारविभूषणायै, कर्पूरामोदनिःश्वासायै, पद्मिन्यै, पद्ममन्दिरायै, खड्गिन्यै, चक्रहस्तायै, भुसुण्ड्यै, परिघायुधायै, चापिन्यै, पाशहस्तायै, त्रिशूलवरधारिण्यै, सुबाणायै, शक्तिहस्तायै, मयूरवरवाहनायै, वरायुधधरायै, वीरायै, वीरपानमदोत्कटायै, वसुधायै, वसुधारायै, जयायै, शाकम्भर्यै, शिवायै, विजयायै,

नर्मदोत्कटा । वसुधा वसुधारा च जया शाकम्भरी शिवा । विजया च जयन्ती च सुस्तनी शत्रुनाशिनी । अन्तर्वत्नी वेदशक्तिर्वरदा वरधारिणी । शीतला च सुशीला च बालग्रहविनाशिनी । कुमारी वसुपर्णा च कामाख्या कामवन्दिता । जालन्धरधराऽनन्ता कामरूपनिवासिनी । कामबीजवती सत्या सत्यधर्मपरायणा । स्थूलमार्गस्थिता "३००" सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी । षट्कोणा च त्रिकोणा च त्रिनेत्रा वृषभध्वजा । वृषप्रिया वृषारूढा महिषासुरघातिनी । शुम्भदर्पहरा दीप्ता दीप्तपावकसन्निभा । क-

जयन्त्यै, सुस्तन्यै, शत्रुना शिन्यै, अन्तर्वत्न्यै, वेदश क्त्यै, वरदायै, वरधारिण्यै शीतलायै, सुशीलायै, बाल ग्रहविनाशिन्यै, कुमार्यै, व सुपर्णायै, कामाख्यायै, का मवन्दितायै, जालन्धरधराय् अनन्तायै, कामरूपनिवासि न्यै, कामबीजवत्यै, सत्यायै सत्यधर्मपरायणायै, "तेजोऽसि ॐस्थूलमार्गस्थितायैस्वाहा, २०० ॥ "यावत्पदं पदसरो जयुगं त्वदीयं नाङ्गीकरोति हृदयेषु जगच्छरण्ये । ताव द्विकल्पजटिला कुटिलप्रका रास्तर्कग्रहाः समयिनां प्रलय न यान्ति ॥" ॐसूक्ष्माय स्वाहा, सूक्ष्मबुद्धिप्रबोधिन्यै षट्कोणायै, त्रिकोणायै, त्रि नेत्रायै, वृषभध्वजायै, वृष प्रियायै, वृषारूढायै, महिषा सुरघातिन्यै, शुम्भदर्पहरायै दीप्तायै, दीप्तपावकसन्निभा

पालभूषणा काली कपालमालभारिणी । कपालकुण्डला दीर्घा शिवदूती घनध्वनिः । सिद्धिदा बुद्धिदा नित्या सत्यमार्गप्रबोधिनी । कम्बुग्रीवा वसुमती च्छत्रच्छायाकृतालया । जगद्गर्भा कुण्डलिनी भुजगाकारशायिनी । प्रोल्लसत्सप्तपद्मा च नाभिनालमृणालिनी । मूलाधारा निराकारा वह्निकुण्डकृतालया । वायुकुण्डसुखासीना निराधारा निराश्रया । श्वासोच्छ्वासगतिर्जीवाग्राहिणी वह्निसंश्रया । वल्लीतन्तुसमुत्थाना षड्रसास्वादलोलुपा । तपस्विनी तपःसिद्धिस्तपसः सिद्धिदायिनी । तपोनिष्ठा

यै, कपालभूषणायै, काल्यै, कपालमालभारिण्यै, कपालकुण्डलायै, दीर्घायै, शिवदूत्यै, घनध्वनये, सिद्धिदायै, बुद्धिदायै, नित्यायै, सत्यमार्गप्रबोधिन्यै, कम्बुग्रीवायै, वसुमत्यै, छत्रच्छायाकृतालयायै, जगद्गर्भायै, कुण्डलिन्यै, भुजगाकारशायिन्यै, प्रोल्लसत्सप्तपद्मायै, नाभिनालमृणालिन्यै, मूलाधारायै, निराकारायै, वह्निकुण्डकृतालयायै, वायुकुण्डसुखासीनायै, निराधारायै, निराश्रयायै श्वासोच्छ्वासगतये, जीवाग्राहिण्यै, वह्निसंश्रयायै, वल्लीतन्तुसमुत्थानायै, षड्रसास्वादलोलुपायै, तपस्विन्यै, तपःसिद्धये, तपसःसिद्धदायिन्यै, तपोनिष्ठायै, तपोयुक्तायै, तापस्यै, तपःप्रियायै, सप्तधा-

तपोयुक्ता तापसी च तपःप्रिया। सप्तधातुमयी मूर्तिः सप्तधात्वन्तराश्रया। देहपुष्टिर्मनःपुष्टिरन्नपुष्टिर्बलोद्धृता। ओषधिर्वैद्यमाता च द्रव्यशक्तिः प्रभावती। वैद्या वैद्यचिकित्सा च सुपथ्या रोगनाशिनी। मृगया मृगमांसादा मृगत्वङ्मृगलोचना। वागुरा बन्धरूपा च वधरूपा वधोद्धृता। वन्दी वन्दिस्तुताकारा काराबन्धविमोचिनी। शृङ्खला खलहा विद्युद्दृढबन्धविमोचिनी। अम्बिकाऽम्बालिका चाम्बा स्वक्षा साधुजनार्चिता। कौलिकी कुलविद्या च सुकुला कुलपूजिता। कालचक्रभ्रमा भ्रान्ता विभ्रमा भ्रमनाशिनी।

तुमय्यै, मूर्त्यै, सप्तधात्वन्तरा श्रयायै, देहपुष्ट्यै, मनःपु ष्ट्यै, अन्नपुष्ट्यै, बलोद्धृतायै ओषधये, वैद्यमात्रे, द्रव्यश क्त्यै, प्रभावत्यै, वैद्यायै, वै द्यचिकित्सायै, सुपथ्यायै, रो गनाशिन्यै, मृगयायै, मृगमां सादायै, मृगत्वचे, मृगलोच नायै, वागुरायै, बन्धुरूपायै वधरूपायै, वधोद्धृतायै, वन्द्यै वन्दिस्तुतायै, कारायै, कारा बन्धविमोचिन्यै, शृङ्खलायै खलहायै, विद्युते, दृढबन्धवि मोचिन्यै, अम्बिकायै, अम्बा लिकायै, अम्बायै, स्वक्षायै साधुजनार्चितायै, कौलिक्यै कुलविद्यायै, सुकुलायै, कुल पूजितायै, कालचक्रभ्रमायै भ्रान्तायै, विभ्रमायै, भ्रमना शिन्यै, वातालयै, मेघमालायै सुवृष्ट्यै, सस्यवर्धिन्यै, अ कारायै, इकारायै, "तेजोऽ

वात्याली मेघमाला च सुवृष्टिः सस्यवर्धिनी । अकारा च इकारा च "४००" । उकारैकाररूपिणी । ह्रींकारीबीजरूपा च क्लींकाराम्बरवासिनी । सर्वाक्षरमयीमूर्तिरक्षरा वर्णमालिनी । सिन्दूरारुणवर्णा च सिन्दूरतिलकप्रिया । वश्या च वश्यबीजा च लोकवश्यविभाविनी । नृपवश्या नृपसेव्या नृपवश्यकरी प्रिया । महिषी नृपमान्या च नृमान्या नृपनन्दिनी । नृपधर्ममयी धन्या धनधान्यविवर्धिनी । चतुर्वर्णमयी मूर्तिश्चतुर्वर्णैः सुपूजिता । सर्वधर्ममयी सिद्धिश्चतुराश्रमवासिनी । ब्राह्मी क्षत्रिया वैश्या

ॐउकारायैस्वाहा ॥४००॥ "तां भवानीं भवानीतक्लेशनाशविशारदाम् । शारदां शरदम्भोजसितपद्मासनां नमः ॥"
ॐऐकाररूपिण्यैस्वाहा, ह्रींकारीबीजरूपायै, क्लींकाराम्बरवासिन्यै, सर्वाक्षरमयीमूर्त्यै, अक्षरायै, वर्णमालिन्यै, सिन्दूरारुणवर्णायै, सिन्दूरतिलकप्रियायै, वश्यायै, वश्यबीजायै, लोकवश्यविभाविन्यै, नृपवश्यायै, नृपसेव्यायै, नृपवश्यकर्यै, प्रियायै, महिष्यै, नृपमान्यायै, नृमान्यायै, नृपनन्दिन्यै, नृपधर्ममय्यै, धन्यायै, धनधान्यविवर्धिन्यै, चतुर्वर्णमयीमूर्त्यै, चतुर्वर्णैःसुपूजितायै, सर्वधर्ममयीसिद्ध्यै, चतुराश्रमवासिन्यै, ब्राह्मण्यै, क्षत्रियायै, वैश्यायै, शूद्रायै, अवरवर्ण-

शूद्रा चावरवर्णजा । वेदमार्गरता यज्ञा वेदविश्वविभाविनी । अस्त्रशस्त्रमयीविद्या वरशस्त्रास्त्रधारिणी । सुमेधा सत्यमेधा च भद्रकाल्यऽपराजिता। गायत्री सत्कृतिः सन्ध्या सावित्री त्रिपदाश्रया । त्रिसन्ध्या त्रिपदा धात्री सुपर्वा सामगायनी । पञ्चाली बालिका बाला बालक्रीडा सनातनी । गर्भाधारधरा शून्या गर्भाशयनिवासिनी । सुरारिघातिनी कृत्या पूतना च तिलोत्तमा। लज्जा रसवती नन्दा भवानी पापनाशिनी। पट्टाम्बरधरा गीतिः सुगीतिर्ज्ञानलोचना । सप्तसुरमयी तन्त्री षड्जमध्यमदैवता। मूर्छा-

जायै, वेदमार्गरतायै, यज्ञायै वेदविश्वविभाविन्यै, अस्त्रशस्त्रमयीविद्यायै, वरशस्त्रास्त्रधारिण्यै, सुमेधायै, सत्यमेधायै, भद्रकाल्यै, अपराजितायै, गायत्र्यै, सत्कृतये, सन्ध्यायै, सावित्र्यै, त्रिपदाश्रयायै, त्रिसन्ध्यायै, त्रिपदायै, धात्र्यै, सुपर्वायै, सामगायिन्यै, पञ्चाल्यै, बालिकायै बालायै, बालक्रीडायै, सनातन्यै, गर्भाधारधरायै, शून्यायै, गर्भाशयनिवासिन्यै सुरारिघातिन्यै, कृत्यायै, पूतनायै, तिलोत्तमायै, लज्जायै रसवत्यै, नन्दायै, भवान्यै पापनाशिन्यै, पट्टाम्बरधरायै गीत्यै, सुगीत्यै, ज्ञानलोचनायै, सप्तसुरमय्यै, तन्त्र्यै, षड्जमध्यमदैवतायै, मूर्छानायै ग्रामसंस्थानायै, स्वच्छस्वस्थनवासिन्यै, अट्टाट्टहासिन्यै प्रेतायै, प्रेतासननिवासि-

ना ग्रामसंस्थाना स्व-
च्छस्वस्थानवासिनी ।
अट्टाट्टहासिनी प्रेता
प्रेतासननिवासिनी ।
गीतनृत्तप्रिया कामा
तुष्टिदा पुष्टिदा क्षया ।
निष्ठा सत्यप्रिया प्र-
ख्या लोकेशी च सु-
रोत्तमा । सुविषा ज्वा-
लिनीज्वाला विष-
मोहार्त्तिनाशिनी । वि-
षारिर्नागदमनी कुरु-
कुल्लाऽमृतोद्भवा । भू-
तभीतिहरा रक्षा
"५००" भूतावेशवि-
नाशिनी । रक्षोघ्नी रा-
क्षसीरात्रिर्दीर्घनिद्रा
दिवागतिः । चन्द्रिका
चन्द्रकान्तिश्च सूर्य-
कान्तिर्निशाचरी । डा-
किनी शाकिनी शि-
ष्या हाकिनी चक्रवा-
किनी । सितासितप्रि-

गीतनृत्तप्रियायै, कामायै, तु-
ष्टिदायै, पुष्टिदायै, अक्षयायै,
निष्ठायै,सत्यप्रियायै, प्रख्यायै,
लोकेश्यै, सुरोत्तमायै, सुवि-
षायै, ज्वालिन्यै, ज्वालायै,
विषमोहार्तिनाशिन्यै, विषा-
र्यै,नागदमन्यै,कुरुकुल्लायै,अ-
मृतोद्भवायै, भूतभीतिहरायै,
"तेजोऽसि" ॐ रक्षायैस्वाहा,
५०० "भवानि त्वं दासे मयि
वितर दृष्टिं सकरुणामिति
स्तोतुं वाञ्छन्कथयति भवानि
त्वमिति यः । तदैव त्वं तस्मै
दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनी-
राजितपदाम् ॥" ॐ भूतावे-
शविनाशिन्यैस्वाहा, रक्षोघ्न्यै,
राक्षस्यै, रात्र्यै, दीर्घनिद्रायै,
दिवागतये,चन्द्रिकायै, चन्द्र-
कान्तये, सूर्यकान्तये, निशा-
चर्यै, डाकिन्यै, शाकिन्यै शि-
ष्यायै, हाकिन्यै, चक्रवाकि-

या स्वङ्गा सुकुला वनदेवता । गुरुरूपधरा गुर्वी मृत्युर्मारी विशारदा । महामारी विनिन्द्रा च तन्द्रा मृत्युविनाशिनी । चन्द्रमण्डलसङ्काशा चन्द्रमण्डलवासिनी । अणिमादिगुणोपेता सुस्पृहा कामरूपिणी । अष्टसिद्धिप्रदा प्रौढा दुष्टदानवघातिनी । अनादिनिधना पुष्टिश्चतुर्बाहुश्चतुर्मुखी । चतुःसमुद्रशयना चतुर्वर्गफलप्रदा । काशपुष्पप्रतीकाशा शरत्कुमुदलोचना । भूता भव्या भविष्या च शैलजा शैलवासिनी । वाममार्गरता वामा शिववामाङ्गवासिनी । वामाचारप्रिया तुष्टिर्लोपामुद्राप्रबोधिनी ।

न्यै, सितासितप्रियायै, स्वङ्गायै, सुकुलायै, वनदेवतायै, गुरुरूपधरायै, गुर्व्यै, मृत्यवे, मार्यै, विशारदायै, महामार्यै, विनिन्द्रायै, तन्द्रायै, मृत्युविनाशिन्यै, चन्द्रमण्डलसङ्काशायै, चन्द्रमण्डलवासिन्यै, अणिमादिगुणोपेतायै, सुस्पृहायै, कामरूपिण्यै, अष्टसिद्धिप्रदायै, प्रौढायै, दुष्टदानवघातिन्यै, अनादिनिधनायै, पुष्टये, चतुर्बाहवे, चतुर्मुख्यै, चतुःसमुद्रशयनायै, चतुर्वर्गफलप्रदायै, काशपुष्पप्रतीकाशायै, शरत्कुमुदलोचनायै, भूतायै, भव्यायै, भविष्यायै, शैलजायै, शैलवासिन्यै, वामामार्गरतायै, वामायै, [illegible]यै, वामाङ्गवासिन्यै, वामाचारप्रियायै, तुष्टये, लोपामुद्राप्रबोधिन्यै, भूतात्मने, परमा

भूतात्मा परमात्मा च भूतभव्यविभाविनी । मङ्गला साधुशीला च परमार्थप्रबोधिका । दक्षिणा दक्षिणामूर्तिः सुदक्षिणा हरिप्रसूः । योगिनी योगियुक्ता च योगाङ्गा ध्यानशालिनी । योगपट्टधरा-मुक्ता मुक्तानां परमागतिः । नारसिंही सुजन्मा च त्रिवर्गफलदायिनी । धर्मदा धनदा चैका कामदा मोक्षदा द्युतिः । साक्षिणी क्षणदा दक्षा दक्षजा कोटिरूपिणी । क्रतुः कात्यायनी स्वच्छा स्वच्छन्दा च कविप्रिया । सत्यागमा बहिःस्था च काव्यशक्तिः कवित्वदा । मेनापुत्री सतीमाता मैनाकभगिनी तडित् । सौदामिनी

त्मने, भूतभव्यविभाविन्यै, मङ्गलायै, साधुशीलायै, परमार्थप्रबोधिकायै, दक्षिणायै, दक्षिणामूर्तये, सुदक्षिणायै, हरिप्रस्वै, योगिन्यै, योगयुक्तायै, योगाङ्गायै, ध्यानशालिन्यै, योगपट्टधरायै, मुक्तायै, मुक्तानांपरमागतये, नारसिंह्यै, सुजन्मने, त्रिवर्गफलदायिन्यै, धर्मदायै, धनदायै, एकायै, कामदायै, मोक्षदायै, द्युतये, साक्षिण्यै, क्षणदायै, दक्षायै, दक्षजायै, कोटिरूपिण्यै, क्रतवे कात्यायन्यै, स्वच्छायै, स्वच्छन्दायै, कविप्रियायै, सत्यागमायै, बहिःस्थायै, काव्यशक्तये, कवित्वदायै, मेनापुत्र्यै, सतीमात्रे, मैनाकभगिन्यै, तडिते "तेजोऽसि" ॐ सौदामिन्यैस्वाहा ६००। "किं किं दुःखं दनुजदलनि क्षीयते न स्मृतायां का का कीर्तिः कुलकमलिनि ख्याप्यते न

सुदामा च सुधामा धामशालिनी । सौभाग्यदायिनी द्यौश्च सुभगा द्युतिवर्धिनी । श्रीकृत्तिवसना चैव कङ्काली कलिनाशिनी । रक्तबीजवधोद्दृप्ता सुतन्तुर्बीजसन्ततिः । जगज्जीवा जगद्बीजा जगत्त्रयहितैषिणी । चामीकररुचिश्चान्द्री साक्षया षोडशीकला यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता । चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी । चामुण्डा मुण्डहस्ता च चण्डमुण्डवधोद्धुरा । अष्टम्येकादशी पूर्णा नवमी च चतुर्दशी । अमा कलशहस्ता च पूर्णकुम्भपयोधरा । अभीरुर्भैरवी भीरा भीमा त्रिपुरभैरवी । महा-

स्तुतायाम् । का का सिद्धि सुरवरनुते प्राप्यते नार्चित यां कं कं योगं त्वयि न चिनु चित्तमालम्बितायाम्" ॥ सुदामायै स्वाहा, सुधामायै धामशालिन्यै, सौभाग्यदायिन्यै, दिवे, सुभगायै, द्युतिवर्धिन्यै, श्रीकृत्तिवसनायै कङ्काल्यै, कलिनाशिन्यै रक्तबीजवधोद्दृप्तायै, सुतन्तु बीजसन्ततये, जगज्जीवायै जगद्बीजायै, जगत्त्रयहितैषिण्यै, चामीकररुचये चान्द्र्यै साक्षयायै, षोडशीकलायै यत्तत्पदानुबन्धायै, यक्षिण्यै धनदार्चितायै, चित्रिण्यै, चित्रमायायै, विचित्रायै, भुवनेश्वर्यै, चामुण्डायै, मुण्डहस्तायै, चण्डमुण्डवधोद्धुरायै अष्टम्यै, एकादश्यै, पूर्णायै नवम्यै, चतुर्दश्यै, अमायै कलशहस्तायै, पूर्णकुम्भपयोधरायै, अभीरवे, भैरव्यै भीरायै, भीमायै, त्रिपुर

रुण्डा च रौद्री च महाभैरवपूजिता । निर्मुण्डा हस्तिनी चण्डा करालदशनानना । कराला विकराला च घोरा घुर्घुरनादिनी । रक्तदन्तोर्ध्वकेशी च बन्धूककुसुमारुणा । कादम्बरी पटासा च काश्मीरी कुङ्कुमप्रिया । क्षान्तिर्बहुसुवर्णा च मतिर्बहुसुवर्णदा । मातङ्गिनी वरारोहा मत्तमातङ्गगामिनी । हिंसा हंसगतिर्हंसी हंसोज्ज्वलशिरोरुहा । पूर्णचन्द्रमुखी श्यामा स्मितास्या श्यामकुन्तला । मषी च लेखनी लेखा सुलेखा लेखकप्रिया । शङ्खिनी शङ्खहस्ता च जलस्था जलदेवता । कुरुक्षेत्रावनिः काशी मथुरा काञ्च्यवन्ति-

रुण्ड्यै, महारुण्डायै, रौद्र्यै, महाभैरवपूजितायै, निर्मुण्डायै, हस्तिन्यै, चण्डायै, करालदशनाननायै, करालायै, विकरालायै, घोरायै, घुर्घुरनादिन्यै, रक्तदन्तायै, ऊर्ध्वकेश्यै, बन्धूककुसुमारुणायै, कादम्बर्यै, पटासायै, काश्मीर्यै, कुङ्कुमप्रियायै, क्षान्तये, बहुसुवर्णायै, मतये, बहुसुवर्णदायै, मातङ्गिन्यै, वरारोहायै, मत्तमातङ्गगामिन्यै, हिंसायै, हंसगतये, हंस्यै, हंसोज्ज्वलशिरोरुहायै, पूर्णचन्द्रमुख्यै, श्यामायै, स्मितास्यायै, श्यामकुन्तलायै, मष्यै, लेखन्यै, लेखायै, सुलेखायै, लेखकप्रियायै, शङ्खिन्यै, शङ्खहस्तायै, जलस्थायै, जलदेवतायै, कुरुक्षेत्रावनये, काश्यै, मथुरायै, काञ्च्यै, अवन्तिका-

का । अयोध्या द्वारि-
कामाया तीर्था तीर्थ-
करप्रिया । त्रिपुष्क-
राऽप्रमेया च कोश-
स्था कोशवासिनी ।
कौशिकी तु कुशावर्ता
॥ ७०० ॥ कोशाम्बी
कोशवर्धिनी । कोश-
दा पद्मकोशाक्षी कुसु-
म्भकुसुमप्रिया । तो-
तुला च तुलाकोटिः
कोटिस्था कोटराश्र-
या । स्वयम्भूश्च सुगु-
प्ता च सुरूपा रूपव-
र्धिनी । तेजस्विनी सु-
भिक्षा च बलदा बल-
दायिनी । महाकोशी
महावर्त्ता बुद्धिः सद-
सदात्मिका । महा-
ग्रहहरा सौम्या वि-
शोका शोकनाशिनी ।
सात्त्विकी सत्त्वसंस्था

यै, अयोध्यायै, द्वारिकामा
यायै, तीर्थायै, तीर्थकरप्रि
यायै, त्रिपुष्करायै, अप्रमे
यायै, कोशस्थायै, कोशवा
सिन्यै, कौशिक्यै, "तेजोऽसि
ओंकुशावर्तायैस्वाहा, ७००
आरक्ताभां त्रिनेत्रां मणिमुकु
टवतीं रत्नताटङ्करम्यां हस्ता
म्भोजैः सपाशाङ्कुशमदनध
नुःसायकैर्विस्फुरन्तीम् । आ
पीनोत्तुङ्गवक्षोरुहतटविलुठ-
त्तारहारोज्ज्वलाङ्गीं ध्यायाम्य
म्भोरुहस्थामरुणविवसनामी
श्वरीमीश्वराणाम् ॥ ॐको
शाम्ब्यैस्वाहा, कोशवर्धि
न्यै, कोशदायै, पद्मकोशाक्ष्यै
कुसुम्भकुसुमप्रियायै, तोतु
लायै, तुलाकोटये, कोटिस्थायै
कोटराश्रयायै, स्वयम्भुवे, सु
गुप्तायै, सुरूपायै, रूपवर्धिन्यै,
तेजस्विन्यै, सुभिक्षायै, ब
लदायै, बलदायिन्यै, महाको
श्यै, महावर्तायै, बुद्धये, सदस
दात्मिकायै, महाग्रहहरायै

च राजसी च रजोवृता । तामसी च तमोयुक्ता गुणत्रयविभाविनी । अव्यक्ता व्यक्तरूपा च वेदविद्या च शाम्भवी । शम्भुकल्याणिनी कल्पा मनःसङ्कल्पसन्ततिः । सर्वलोकमयी शक्तिः सर्वश्रवणगोचरा । सर्वज्ञानवती वाञ्छा सर्वतत्त्वावबोधिनी । जाग्रती च सुषुप्तिश्च स्वप्नावस्था तुरीयका । त्वरा मन्दगतिर्मन्दा मदिरामोदधारिणी । पानभूमिः पानपात्रा पानदानकरोद्यता । अघूर्णारुणनेत्रा च किञ्चिदव्यक्तभाषिणी । आशापूरा च दीक्षा च दक्षा दीक्षितपूजिता ॥ ६० ॥ नागवल्ली नागकन्या भोगिनी भोगवल्लभा । सर्वशास्त्रवती विद्या सुस्मृति-

सौम्यायै, विशोकायै, शोकनाशिन्यै, सात्त्विक्यै, सत्त्वसंस्थायै, राजस्यै, रजोवृतायै, तामस्यै, तमोयुक्तायै, गुणत्रयविभाविन्यै, अव्यक्तायै, व्यक्तरूपायै, वेदविद्यायै, शाम्भव्यै, शम्भुकल्याणिन्यै, कल्पायै, मनःसङ्कल्पसन्तत्यै, सर्वलोकमयीशक्तये ४० सर्वश्रवणगोचरायै, सर्वज्ञानवत्यै, वाञ्छायै, सर्वतत्त्वावबोधिन्यै, जाग्रत्यै, सुषुप्तये, स्वप्नावस्थायै, तुरीयकायै, त्वरायै, मन्दगतये, मन्दायै, मदिरामोदधारिण्यै, पानभूमये, पानपात्रायै, पानदानकरोद्यतायै, अघूर्णारुणनेत्रायै, किञ्चिदव्यक्तभाषिण्यै, आशापूरायै, दीक्षायै, दक्षायै, दीक्षितपूजितायै, नागवल्ल्यै, नागकन्यायै, भोगिन्यै, भोगवल्लभायै, सर्वशास्त्रवतीविद्यायै, सुस्मृतये, धर्मवादिन्यै,

धर्मवादिनी । श्रुतिः श्रुतिधरा ज्येष्ठा श्रेष्ठा पातालवासिनी । मीमांसा तर्कविद्या च सुभक्तिर्भक्तवत्सला। सुनाभिर्यातना जातिर्गम्भीराऽभाववर्जिता। नागपाशधरा मूर्तिरगाधा नागकुण्डला। सुचक्रा चक्रमध्यस्था चक्रकोणनिवासिनी । सर्वमन्त्रमयी विद्या सर्वमन्त्राक्षरावलिः । मधुस्रवा स्रवन्ती च भ्रामरी भ्रमरालका । मातृमण्डलमध्यस्था मातृमण्डलवासिनी । कुमारजननी क्रूरा सुमुखी ज्वरनाशिनी । अतीता विद्यमाना च भाविनी प्रीतिमञ्जरी ॥ ८०० ॥ सर्वसौख्यवती युक्तिराहारपरिणामिनी । निधानं पञ्चभूतानां भवसागर-

श्रुतये, श्रुतिधरायै, ज्येष्ठा[यै,] श्रेष्ठायै, पातालवासिन्यै, मी[मां]मांसायै, तर्कविद्यायै, ७५ सु[भक्त्यै,] भक्तये, भक्तवत्सलायै, सुना[भये,] भये, यातनायै, जात्यै, गम्भी[रायै,] रायै, अभाववर्जितायै, नाग[पाशधरायै,] पाशधरामूर्तये, अगाधायै, नागकुण्डलायै, सुचक्रायै, चक्रमध्यस्थायै, चक्रकोणनि[वासिन्यै,] वासिन्यै, सर्वमन्त्रमयीविद्या[यै,] यै, सर्वमन्त्राक्षरावलये, मधु[स्रवायै,] स्रवायै, स्रवन्त्यै, भ्रामर्यै, भ्रमरालकायै, मातृमण्डलम[ध्यस्थायै,] ध्यस्थायै, मातृमण्डलवासि[न्यै,] न्यै, कुमारजनन्यै, क्रूरायै, सुमुख्यै, ज्वरनाशिन्यै, अ[तीतायै,] तीतायै, विद्यमानायै, भा[विन्यै,] विन्यै, "तेजोऽसि" ॐ प्रीति[मञ्जर्यै] मञ्जर्यै स्वाहा ८०० भक्ता[नां] सिद्धिदात्री नलिनयुगकर[ा] श्वेतपद्मासनस्था लक्ष्मीरूप[ा] त्रिनेत्रा हिमकरवदना सर्वै[श्वर्यदात्री] त्यन्द्रहर्त्री । वागीशी सि[द्धि]कर्त्री सकलमुनिजनैः सेवित[ा]

तारिणी । अक्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता । रोहिणी भूमिगर्भा च कालभूः कालवर्जिता । कलङ्करहिता नारी चतुष्षष्ट्यभिधावती । जीर्णा च जीर्णवस्त्रा च नूतना नववल्लभा । अजरा नियतिः प्रीतिररतिरागविवर्धिनी । पञ्चवातगतेर्भिन्ना पञ्चश्लेष्माशयाधरा । पञ्चपित्तवती पंक्तिः पञ्चस्थानविभाविनी । ऋतुमती कामवती बहिःप्रस्रविणी त्र्यहा । रजःशुक्रधराशक्तिर्जरायुर्गर्भधारिणी । त्रिकालज्ञा त्रिलिङ्गा च त्रिमूर्तिः पुरवासिनी । अरागा शिवतत्त्वा च कामतत्त्वानु-

या भवानी नौम्यहं नौम्यहं त्वां हरिहरनमितां शारिकां नौमि नौमि ॥ ओं सर्वसौख्यवतीयुक्तयै स्वाहा, आहारपरिणामिन्यै, पञ्चभूतानां निधानायै, भवसागरतारिण्यै, अक्रूरायै, ग्रहवत्यै, विग्रहायै, ग्रहवर्जितायै, रोहिण्यै, भूमिगर्भायै, कालभुवे, कालवर्जितायै, कलङ्करहितायै, नार्यै, चतुःषष्ट्यभिधावत्यै, जीर्णायै, जीर्णवस्त्रायै, नूतनायै, नववल्लभायै, अजरायै, नियत्यै, प्रीत्यै, अतिरागविवर्धिन्यै, पञ्चवातगतेर्भिन्नायै, पञ्चश्लेष्माशयाधरायै, पञ्चपित्तवतीपङ्क्त्यै, पञ्चस्थानविभाविन्यै, ऋतुमत्यै, कामवत्यै, बहिःप्रस्रविण्यै, त्र्यहायै, रजःशुक्रधराशक्तये, जरायवे, गर्भधारिण्यै, त्रिकालज्ञायै, त्रिलिङ्गायै, त्रिमूर्तये, पुरवासिन्यै, अरागायै, शिवतत्त्वायै, कामतत्त्वानुरागिण्यै,

